# लघुमाध्यन्दिनीया शिक्षा

अथ शिक्षां प्रवक्ष्यामि माध्यन्दिनमतँय्यथा
षकारस्य खकारः स्याट्टुकयोगे तु नो भवेत् १
इषे लक्ष्यं कृष्णऽउक्षा समुद्रः प्रत्युदाहृतिः
पदादौ विद्यमानस्य ह्यसँयुक्तस्य यस्य च २
आदेशो हि जकारः स्याद्युक्तः सन्हरणेन तु
यज्ञेन यज्ञं वैलक्ष्यं मयूरे प्रत्युदाहृतिः ३
तस्माद्यज्ज्ञात्सर्व्वहुतः समस्म्माद्यत्तथैव च
रेफेणाथ हकारेण युक्तस्य सर्वथा भवेत् ४
सूर्यो बाह्यन्तु वैलक्ष्यं शष्प्याय प्रत्युदाहृतिः
यकारर्कारयुक्तस्य जकारः सर्वथा भवेत् ५
सहरय्या तथा व्यृद्ध्या चोपसर्गपरस्य न
उपयज्ञम्मानुषाणामपि यन्तीत्युदाहृतिः ६
गुरुर्वकारो विज्ञेयः पदादौ पठितो भवेत्
विभ्राडुदाहृतिर्ज्ञेया सवितान्तर्लघुः स्मृतः ७
पदान्ते वै लघुतरस्तव व्वायवृतस्पते
उपसर्गपरो यस्तु सवकारो लघुर्मतः ८
वो वां वा वै मन्त्रपाठे लघवो गुरवः पदे
प्रवायुमच्छा बृहती वातो वेति निदर्शनम् ९
रेफो रेफत्वमाप्नोति शषहेषु परेषु च
ददर्श वर्षो अर्हाच्च संय्योगे नैव कारयेत् १०
व्वर्ष्म्मन्वर्ष्यायान्तर्हृदा तत्र तावदुदाहृतिः
लकारोऽपि च सावर्ण्यादिकारसदृशो भवेत् ११
शतबल्शा च बल्हा च तत्र तावदुदाहृतिः
अनुस्वारो यत्र कुत्र ठ॰कारो भवति ध्रुवम् १२
ह्रस्वो दीर्घो गुरुश्चेति त्रिविधः परिकीर्तितः
ह्रस्वात्परो भवेद्दीर्घो हठ॰सऽइति दर्शनम् १३

दीर्घात्परो भवेद्ध्रस्वो मांसेभ्यऽइति दर्शनम्
गुरौ परे ह्यनुस्वारो गुरुरेव हि स स्मृतः १४
सिंह्यसीति तत्र तावदृकारे दीर्घऽएव सः
देवानां हृदये तद्वत्तस्कराणां तथा सृके १५
अथायोगवाहानाह—
अवर्णाच्च ऋकाराच्च विसर्गः कण्ठ्य एव सः
इवर्णाच्च तथोवर्णात्तथा चैकारपूर्वकः १६
औकारपूर्वकश्चैव तालव्यो भवति ध्रुवम्
एकाराच्च कण्ठतालुर्विसर्गो भवति ध्रुवम् १७
कण्ठ्योष्ठ्यस्तु तथौकाराद् विसर्गो भवति ध्रुवम्
देवो वः सविता चात्र हकारसदृशो भवेत् १८
देवीस्तिस्रो विसर्गस्तु हिकारसदृशो भवेत्
आखुस्ते पशुरित्यादौ हकारसदृशो भवेत् १९
विसर्गश्चाग्नेरित्यादौ हेकारसदृशो भवेत्
विसर्गो बाह्वोरित्यादौ होकारसदृशो भवेत् २०
अथ स्वैर्दृक्षैरित्यादौ हिकारसदृशो भवेत्
विसर्गो द्यौष्पितेत्यादौ हकारसदृशो भवेत् २१
हकारो नैव मन्तव्य इति शास्त्रव्यवस्थितिः
फणिनिश्वाससदृशो विसर्गो भवति ध्रुवम् २२
कनिष्ठिकामोचनं तु नीचे च प्रचये सति
नमः कूप्याय प्रथमो द्वितीयो जाग्रतस्तथा २३
तर्जनीमोचनं कुर्यादुदात्ते तु विसर्गके
देवो धर्मस्तथा ह्रस्वे स्वरिते तूभयं क्षिपेत् २४
अश्वो मर्त्यो भवेल्लक्ष्यं स्वारे दीर्घे कनिष्ठिकाम्
उभयोरपि ह्रस्वे च वकारे स्वरिते सति २५
दीर्घेऽपि चोभयोः क्षेपऽइति शास्त्रव्यवस्थितिः

यथा स्फटिकदराडादिरुपाधिवशतो भवेत्  २६
तद्वदूष्मा प्रयोक्तव्यो हिहुहेहो निदर्शनम्
व्वसोः पवित्रं वै तत्र ह्युदाहरणमुच्यते  २७
ऋकारः खलु सर्वत्र ह्येकारसदृशो भवेत्
हृदे मृगस्तृतीया च ऋचं व्वाचमथापरम्  २८
लघुमाध्यन्दिनीया शिक्षा समाप्ता

Reference:
"Laghumādhyandinīyā Śikṣā," in Ācāryaśrīrāmaprasādatripāṭhī, ed., *Śikṣāsaṁgrahaḥ,* Varanasi: Sampurnanand Sanskrit University Press, 1989, pp. 93-95.